निर्वाणं समुपगमेन यच्छते ते
१बीजानां प्रभव नमोऽस्तु जीवनाय ॥ ३९ ॥

आबाधेति ॥ हे भव बीजानां प्रभव कारणभूत ! आबाधाध्यात्मिकादि दुःखं मरणं पञ्चत्वं ताभ्यां भयं तदेवार्चिर्यस्य तेन महता भवानलेन संसाराग्निना चिराय चिरं प्लुष्टेभ्यो दग्धेभ्यः समुपगमेन संसेवया निर्वाणं संतापशान्तिं यच्छते ददते जीवयतीति जीवनं तस्मै जीवनाय जलात्मने ते तुभ्यं नमः ॥

इदानीं नभोमूर्तिं स्तौति—

यः सर्वेषामावरीता वरीयान्सर्वैर्भावैर्नावृतोऽनादिनिष्ठः ।
मार्गातीतायेन्द्रियाणां नमस्तेऽविज्ञेयाय व्योमरूपाय तस्मै ॥४०॥

य इति ॥ भवेत्यनुवर्तते । भवत्यस्मादयं प्रपञ्च इति भवस्तत्संबुद्धौ । सकलजगज्जनकेति यावत् । वरीयानुरुतरः । विभुरित्यर्थः 'प्रियस्थिर—' इत्यादिनोरुशब्दस्य वरादेशः । यस्त्वं सर्वेषां वस्तूनामावरीताच्छादयिता । वृणोतेस्तृच्प्रत्ययः । सर्वैर्भावैः पदार्थैर्नावृतः केनापि कदाचिदप्यनावृतः । स्वयं व्यापकत्वादिति भावः । अविद्यमाने आदिनिष्ठे उत्पत्तिनाशौ यस्यासावनादिनिष्ठो नित्यः । निष्ठानिष्पत्तिनाशान्ताः' इत्यमरः । इन्द्रियाणां चक्षुरादीनां मार्गातीतायातीन्द्रियाय । अत एवाविज्ञेयायापरिच्छेद्याय तस्मै व्योमरूपाय ते तुभ्यं नमः ॥

अणीयसे विश्वविधारिणे नमो नमोऽन्तिकस्थाय नमोदवीयसे ।
अतीत्य वाचां मनसां च गोचरं स्थिताय ते तत्पतये नमोनमः॥४१॥

अणीयस इति ॥ भवेत्यनुवर्तते । हे भव, अणीयसे सूक्ष्मतराय तथापि विश्वविधारिणे जगद्धारकाय ते तुभ्यं नमः । अन्तिकस्थायान्तर्यामितया संनिकृष्टाय सते । तथापि दवीयसे दुर्ग्रहत्वाद्दूरतराय ते तुभ्यं नमः । वाचां मनसां च गोचरं विषयमतीत्य स्थितायावाङ्मनसगोचराय । तत्पतये तेषां वाङ्मनसानामध्यक्षाय । तदध्यक्षाय । तदध्यक्षस्तैरेव न दृश्यत इति विरोधः । ते तुभ्यं नमो नमः । 'चापले द्वे भवत इति वक्तव्यम्' इति द्विरुक्तिः । 'संभ्रमेण प्रवृत्तिश्चापलम्' इति काशिका । भक्त्युद्रेकाच्च संभ्रमः । विरोधाभासोऽलंकारः ॥

असंविदानस्य ममेश संविदां तितिक्षितुं दुश्चरितं त्वमर्हसि ।
विरोध्य मोहात्पुनरभ्युपेयुषां गतिर्भवानेव दुरात्मनामपि॥४२॥

असंविदानस्येति ॥ संविदां ज्ञानानामीश । 'ईशानः सर्वविद्यानाम्' इति श्रुतेरिति भावः । 'प्रेक्षोपलब्धिश्चित्संवित्' इत्यमरः । असंविदानस्याज्ञानस्य 'समोगम्यृच्छि—' इत्यादिना विदेः संपूर्वादकर्मकाच्छानच्प्रत्ययः । मम दुश्चरितं शस्त्रप्रयोगरूपं दुश्चेष्टितं तितिक्षितुं सोढुम् । तिजेः सन्नन्तात्तुमुन्प्रत्ययः । त्वमर्हसि योग्योऽसि । ननु तव महानपराधः कथं सोढव्यस्तत्राह—विरोध्येति । मोहादज्ञानाद्विरोध्य

१ 'जीवानाम्' इति पाठे तेषां त्वत्प्रतिबिम्बत्वादिति भावः ।

वैरमुत्पाद्य पुनरभ्युपेयुषां पश्चाच्छरणागतानां दुरात्मनामपि भवानेव गतिः । त्वं हि शरणागतानामपराधं न गणयसीत्यर्थः ॥

संप्रति वरं याचते—

आस्तिक्यशुद्धमवतः प्रियधर्म धर्मं
धर्मात्मजस्य विहितागसि शत्रुवर्गे ।
संप्राप्नुयां विजयमीश यया समृद्धया
तां भूतनाथ विभुतां वितराहवेषु ॥ ४३ ॥

आस्तिक्येति ॥ हे प्रियो धर्मो यस्येति प्रियधर्म । 'समासान्तो विधिरनित्यः,' इति न समासान्तोऽनिच्प्रत्ययः । परलोके मतिरस्तीत्यास्तिकः पारलौकिकः । 'अस्ति-नास्तिदिष्टं मतिः—' इति ठक् । तस्य भाव आस्तिक्यं विश्वासस्तेन शुद्धं विमलं धर्मं वैदिकाचारमवतः पालयतो धर्मात्मजस्य युधिष्ठिरस्य विहितागसि कृतापराधे शत्रुवर्गे विषये । हे ईश, यया समृद्धयास्त्रवैभवेन विजयं संप्राप्नुयां भजेयम् । हे भूतनाथ, आहवेषु तां विभुतां विभूतिमस्त्रविद्यां वितर देहि ॥

इति निगदितवन्तं सूनुमुच्चैर्मघोनः ।
प्रणतशिरसमीशः सादरं सान्त्वयित्वा ।
ज्वलदनलपरीतं रौद्रमस्त्रं दधानं
धनुरुपपदमस्मै वेदमभ्यादिदेश ॥ ४४ ॥

इतीति ॥ इत्युच्चैर्निगदितवन्तं प्रणतशिरसं मघोन इन्द्रस्य सूनुमर्जुनमीशो महादेवः सादरं यथा तथा सान्त्वयित्वोपसान्त्व्यास्मा अर्जुनाय ज्वलतानलेन तेजसा परीतं व्याप्तं रौद्रं रुद्रदेवताकं पाशुपतमस्त्रं दधानं धनुरुपपदं धनुःशब्दोपपदं वेदम् । धनुर्वेदमित्यर्थः । अभ्यादिदेश ददौ । अध्यापयामासेत्यर्थः । 'धनुरुपपदं वेदम्' इत्यत्र धनुरुपपदत्वं वेदशब्दस्य न तु संज्ञिनस्तदर्थस्येति संज्ञायाः संज्ञिगतत्वाभावादवाच्यवचनदोषमाहुरालंकारिकाः । तदुक्तम्—' यदेवावाच्यवचनमवाच्यवद्वचनं हि तत्' इति । समाधानं तु धनुःशब्दविशेषितेन वेदशब्देन । शब्दपरेणेत्यर्थः । परोपदेशयोग्यो धनुर्वेदो लक्ष्यत इति कथंचित्संपाद्यम् ॥

स पिङ्गाक्षः श्रीमान्भुवनमहनीयेन महसा
तनुं भीमां बिभ्रत्त्रिगुणपरिवारप्रहरणः ।
परीत्येशानं त्रिः स्तुतिभिरुपगीतः सुरगणैः ।
सुतं पाण्डोर्वीरं जलदमिव भास्वानभिययौ ॥ ४५ ॥

स इति ॥ पिङ्गाक्षः पिङ्गलाक्षः श्रीमाञ्शोभावान्भुवनमहनीयेन लोकपूज्येन महसा तेजसा भीमां तनुं बिभ्रत । त्रिगुणस्त्रिशिखः परिवार आकारो यस्य तत्त्रिगुण-

परिवारं त्रिशूलं तदेव प्रहरणमायुधं यस्य स तथोक्तः। सूर्यपक्षे तु गुणत्रयपरिवारस्त्रय्यात्मक इति योज्यम्। स धनुर्वेदः सुरगणैः स्तुतिभिरुपगीतः सन्। ईशानं शिवं त्रिस्त्रिवारम्। 'द्वित्रिचतुर्भ्यः सुच्' इति सुच्प्रत्ययः। परीत्य प्रदक्षिणीकृत्य स्थितं वीरं पाण्डोः सुतमर्जुनम्। भास्वान्सूर्यो जलदमिव। अभिययौ। शिखरिणीवृत्तम्॥

अथ शशधरमौलेरभ्यनुज्ञामवाप्य
त्रिदशपतिपुरोगाः पूर्णकामाय तस्मै।
अवितथफलमाशीर्वादमारोपयन्तो
विजयि विविधमस्त्रं लोकपाला वितेरुः॥ ४६॥

अथेति॥ अथ शशधरमौलिवरप्रदानानन्तरं त्रिदशपतिपुरोगा इन्द्रादयो लोकपालाः शशधरमौलेः शंभोरभ्यनुज्ञामवाप्य पूर्णकामाय तस्मै पाण्डवायावितथफलममोघफलमाशीर्वादमारोपयन्तः प्रयुञ्जाना विजयि जयशीलं विविधं नानाविधमस्त्रमैन्द्रादिकं वितेरुर्ददुः। मालिनीवृत्तम्॥

१ असंहार्योत्साहं जयिनमुदयं प्राप्य तरसा
धुरं गुर्वीं वोढुं स्थितमनवसादाय जगतः।
स्वधाम्ना लोकानां तमुपरि कृतस्थानममरा-
स्तपोलक्ष्म्या दीप्तं दिनकृतमिवोच्चैरुपजगुः॥ ४७॥

असंहार्योत्साहमिति॥ तरसा बलेन वेगेन च जयिनं जयशीलमुदयमस्त्रलाभरूपमभ्युदयम्। अन्यत्रोदयाद्रिं च। प्राप्यासंहार्योत्साहं संहर्तुमशक्यमुद्योगं जगतोऽनवसादाय क्षेमाय गुर्वीं धुरं दुष्टनिग्रहभरं तमोपसंहाररूपं च भारं वोढुं स्थितम्। स्वधाम्ना स्वतेजसा लोकानामुपरि कृतस्थानं कृतपदम्। अन्यत्रोपरिवर्तमानम्। तपोलक्ष्म्या दीप्तं तं पाण्डवममरा इन्द्रादयो दिनकृतं सूर्यमिवोच्चैरुपजगुः साधु महाभाग्योऽसीति तुष्टुवुः। शिखरिणीवृत्तम्॥

२ व्रज जय रिपुलोकं पादपद्मानतः स-
न्गदित इति शिवेन श्लाघितो देवसंघैः।
निजगृहमथ गत्वा सादरं पाण्डुपुत्रो
धृतगुरुजयलक्ष्मीर्धर्मसूनुं ननाम॥ ४८॥

इति श्री भारविकृतौ महाकाव्ये किरातार्जुनीयेऽष्टादशः सर्गः।

---

१ अस्मिन् श्लोके शिखरिणीवृत्तम्। तल्लक्षणं तु रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणी इति। २ अत्र श्लोकेतु मालिनीवृत्तम्। ननमयययुतेयं मालिनी भोगिलोकैः। इति लक्षणात्।

व्रजेति ॥ शिवेन व्रज स्वपुरं गच्छारिलोकं जयेति गदित उक्तः । यतः पादप्रणतः शिवपादपङ्कजानतः संस्तथा देवसंघैः श्लाघितः स्तुतोऽत एव घृता गुर्वी जयलक्ष्मीर्येन स पाण्डुपुत्रोऽर्जुनो निजगृहं स्वाश्रमं गत्वा प्राप्याथ सादरं यथा तथा धर्मसूनुं युधिष्ठिरं राजानं ननस्वक्रे ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायामष्टादशः सर्गः ॥

## समाप्तमिदं किरातार्जुनीयं नाम महाकाव्यम् ।



